# ॥ कावेरी अथवा सह्यजानवरत्नमालिका ॥

श्रीगणेशाय नमः ।
श्रीगुरुभ्यो नमः ।

॥ श्रीः ॥

अथ सह्यजानवरत्नमालिका ।
यत्पाथःकणवाहि मारुतलव स्पृष्टेषु दुष्टेष्वपि
प्रध्वंसम्प्रबलैनसां विदुरिह प्राज्ञाभवाज्ञाजुषः ।
सिष्णासां त्वयिबिभ्रतो ममचिरात् कृष्णाधिके सह्यजे
निष्णातासि न किं विगाहनकृतः पङ्कौघसङ्क्षालने ॥ १॥

कावेरित्वत्कवारि प्रवहति सरितां सार्वभौमीहभूमौ
यत्रायम्पुण्यदेशः सतुकिमुत वृषाकप्यभीष्टस्थलञ्चेत ।
काश्या तुल्यानि यानित्वगणिषत षडप्यार्षगीषुस्थलानि
श्वेतारण्यं च तेष्वादिममिहवसतां कोयमस्तस्यकेऽमी ॥ २॥

कावेरि त्वद्वारि पुरोदरेऽस्मिन्
स्नायं स्नायं धूतपापोऽस्ततापः ।
आसञ्जीर्णः पूर्णकामस्तदित्थं
विज्ञाप्यस्ते वल्लभ सिन्धुराजः ॥ ३॥

राज्ञःसेवादुष्करासर्वनॄणां
कान्तोभीमैर्भीमरूपस्स यस्मात् ।
प्राप्तायेतद्वल्लभायाः प्रसादं
सिद्धंसर्वाभीष्टमेषां ह्ययत्नात् ॥ ४॥

महारावारवारौघैः भीषणैः श्रोत्रभीर्तिदैः ।
कथन्नुमादृशां शक्यो राजापामुपसेवितुम् ॥ ५॥

अम्भोनिधेरनुगुणं भवतीकलत्रं
लोकान् विलोकनत एव युवां पुनीथः ।
पानावगाहन मुखोपकृति प्रकर्षात्
देवित्वमेनमतिशय्य विभासिमातः ॥ ६॥

कालं पतीक्ष्यैव सजातु सेव्यः
त्वत्तोऽधिकङ्किन्नु फलन्ददाति ।

तस्मान्नदीराजमहिष्यलंमे
त्वत्संश्रयो यत्फलमम्बसूते ॥ ७॥

असह्यपापवारिणि त्वदीयपुण्यवारिणि
क्वसह्यजे निमज्जतामघौघ साध्वसंनृणाम् ।
विधूतपातका हि ते विनैवकृच्छ्रजश्रमं
प्रयान्ति शम्भुमन्दिरं प्रकृष्टपुण्यभासुराः ॥ ८॥

सह्याद्रेःपितुरन्तिकात् पतिगृहं गन्तुम्प्रवृत्तासती
कावेरी कृतचोलमण्डल परिष्काराभ्युदञ्चद्रसा ।
स्वर्णस्तोमयुता सती प्रियतमं सन्तोष्यरत्नाकरं
श्वेतारण्यपतेः प्रसादमयते द्वेधास्थिता पार्श्वयोः ॥ ९॥

कावेरि त्वत्स्तोत्रमेतत् पठन्ति
श्रद्धाशुद्धा भक्तियुक्ता भवत्याम् ।
स्नातापुंसां वारिपूरेत्वदीये
यावत्पुण्यं तावदेते लभन्ताम् ॥ १०॥

सह्यजास्तवन रत्नमालिका
त्यागराजमखिनो मुखोद्गता ।
गृह्यतां परगुणैकशंसिभिः
शङ्कराङ्घ्रि कमले समर्पिता ॥ ११॥

कदावा कावेरि त्वयि वृषभतीर्थेऽच्छसलिले
तुलामासे दर्शेसति गगनमध्येसवितरि ।
समस्ताभिर्गङ्गा प्रभृतितटिनीभिस्समुदिते
विगाहिष्ये विप्रैर्निगमनिरतैः पूरिततटे ॥ १२॥

इति त्यागराजमखिवर्यकृतिषु
कावेरीनवरत्नमालिकास्तोत्रं सम्पूर्णम् ॥